श्रीवीरशैवधर्मस्य लिख्यते कौस्तुभो मया ।
तदाचारैक निष्ठानां प्रसादाय महात्मनाम् ॥१॥
श्रीमज्जङ्गमरूपिणेऽखिल जगत्संरक्षणोद्योगिने ।
श्रीवेदान्तवचोविलास रचना संवेद्य चिन्मूर्तये ॥
श्रीवीरव्रत निष्ठ भक्त हृदयाम्भोजात सन्मण्टपे ।
संलक्ष्याय नमो नमोस्तु सततं लिङ्गाय चिज्ज्योतिषे ॥२॥
मूर्तिर्यस्य विशुद्ध सत्व विमला कुन्देन्दु हीरोपमा ।
वामाङ्गीकृत योषिदानत जगद्भ्रेयो विधानोत्सुक ॥
जाया पुण्य विशेष वैभव वतां चेतःप्रसादोदयै ।
धात्री जन्म जरा विमोचन मुमा कान्तस्समे भासताम् ॥३॥
यामाया प्रकृतिस्त्रिभि[illegible] निज गुणैर्दीप्राप्य मिश्रैर्मिथैः ।
श्चैतन्य प्रतिबिम्ब डम्बर वशाद्विश्वात्मना दृश्यते ॥
अस्मार्कं वितरीत रीतु सकलां सम्प्राप्तिमव्याहता ।
मुन्मील त्करुणा [illegible] तराङ्कित दृशा लीलाञ्चिता [illegible] साशिवा ॥४॥
तन्यासा मति वेल भक्ति कलना स्वाधीन गङ्गाधरा ।
स्फारावार कृपासमुद्गलहरी कल्लोल मालापूतै ॥
साक्षादीश मुखोद्गमागम मतप्रख्यापनादेशिका ।
वस्माकं स्थिर भक्ति भाग्य कणिकां नन्दीशभृङ्गीश्वरौ ॥५॥
शम्भोरुन्मेष दत्यमर्ष पिशुना स्फारस्फुरद्राजसो ।
४ द्रेकाकार भयं करोन्नततनु वीराश्रिया वासभूः ॥
दृप्यद्दुर्जन सङ्घ तर्जन विधे धीरारवेणै वयो ।
निर्व्यौटा मम [illegible] सूनान्वि धुन्वन्तु नः ॥६॥

दत्तामुत्तमबुद्धिकौशलबलं वेलातिमाम्नायभू ।
विश्रान्ताखिलशैवतत्त्वसरणिं सत्कामिकाद्यागमैः ॥
व्यक्ता पञ्चमुखोद्गतैस्तनुकृतां देव्याच यः षण्मुखः ।
शिष्यान्बोधयति स्फुटं तनुकरो व्यक्तार्थदीटर्याय धी ॥७॥
चित्ते भित्तौ समस्तान्नहरहरमलान्चित्रये चित्ररूपान् ।
भास्वत्कैलासशृङ्गे भवनवचरणद्वन्द्वयोर्द्वन्द्वयजम् ॥
सेवामेवात्मभावातिशयितमनसा कुर्वतं सार्वकालं ।
सर्वाभीष्टार्थदानात्प्रवणमतविदसान्गणेशाननं तान् ॥८॥
भूमौ विशुद्ध शाम्बरीमतितरामात्मप्रभावेन वै ~~यं कूलं क~~ ।
यं कूलं कवणं न्यवारयदधस्फीतानकम्पानिधेः ॥
तं भूयोखिल वीरशैवमतभूमन्दारभूमिरुहं ।
वन्देऽहं बसवेश्वरं यवयतां तद्ब्रह्मविद्यागुरुं ॥९॥
चेतस्या कलयामि तं प्रभुवरं शैवाध्वनीनाग्रमा ।
स्तोमोन्मूलनचित्सुखसुधाधाराप्रपायत्तनम् ॥
भुक्त्यध्वप्रतिकूलदुर्मततमस्तोमोपहाविर्भवा ।
राकाचन्द्रमसं यदलमख्यातं करुणं गुरुम् ॥१०॥
यो भूमाववतीर्य चन्नबसवः शैवाध्वदीक्षागुरु ।
धर्माकारबृहद्विनाथ स्वयं रतायाति भूम्याकृतम् ॥
लीलामानुषभावतः कलखलोत्सेकापहारोत्सुकं ।
कार्याकार्यविवेकमाशु दिशता ब्रह्मामृताधारभूः ॥११॥
विख्यातान्प्रणमः परार्थमहिमास्तोमैरनेकक्रमैः ।
विच्छिन्नाखिलमुक्तिसाधनकलतत्पातिशापनैः ॥
तत्ताद्दुर्मतनिर्मिताशयभरभ्रष्टानदृष्टार्थधी ।
वैशद्येन कृतार्थितान्कलयतस्तान्मञ्चणागणान् ॥१२॥
स्वाधीना सर्वविद्या तदपि निजपदाधीनमूलोलाघविद्यम् ।
शान्तं सर्वेषणास्कृप्रथितशिवपदान्वेषणार्थैव शान्तम् ॥
चित्तायत्ताष्टसिद्धिः परिचितनिजदृग्पद्वृष्पञ्चेष्टसिद्धिः ।
पादद्वन्द्वस्य यास्याद्गुरुबसवयतेः श्रेयसे भूयसे स्यात् ॥१३॥
अस्त्विश्रीनगरी दयाम्बुलहरी सर्वोत्तरा द्वैकरी ।
सत्याब्जभ्रमरी सखेलनरी नृत्यद्रुमाचातुरी ॥
वेदोद्घोषझरी विशेषमुखरी भूतात्मसम्पत्करी ।
भव्या वेणुपुरी निरीतिरधरीभत्तद्यपारम्परी ॥१४॥

(आस्ते स्यां करदी कृतारिकेब्दी भूपान्कम्पानदी)

आस्ते स्यां करदी कृतारि केब्दी भूपान् कम्पानदी ।
जानि श्री बसव क्षितीन्द्र विभव प्रेमानुरूपोद्भवः ॥
शौर्यौदार्य खलस्वभाव सुकल स्थैर्येच हेमाचलः ।
श्रेयो बारिधि सोमशेखर महीपालं स्वयं निर्मलं ॥१५॥
निर्वाणाभे धरामयत्तय लीलावसुर्मानसं ।
लोकानुग्रहणाय निग्रहकृते धर्मद्विषा मृद्दहन् ॥
साचिव्यं कलयन् क्रमण्य धरणी नेतुर्वृषा धीश्वरः ।
सर्वेषां जगतां मुदं वितनुते श्री वीर शैवाग्रणीः ॥१६॥
निस्सीमातुल विक्रमः कविजनादीनार्थदानकृ ।
भूभक्ुलि [redacted] व्यक्रमम् ॥

सत्येमानसि संक्रमः सचिवराणिवाण मन्त्रिक्रमः ॥१७॥
धैर्यौदार्य यशः सुशौर्य विभवा गाम्भीर्यमाधुर्य ।
मुख्यास्ते विविधा गुणाः प्रतिफलं भूयोति भूमिं गताः ॥
साम्बाधीनपरस्परं वरगणा स्तास्मिन्नमीं तस्वयं ।
मूर्तिर्भूय विभाति लोकतपसा धीराख्यया ॥१८॥
प्रख्यातो भद्रप्प नामा प्रभुवर तिलको भूच्छिवाचार निष्ठ ।
स्तस्यै वासौ तनूजः परमगुणपरो भूतसुधी र्नारिपाख्यः ॥
तद्गर्भाब्धौ समुद्यत्सुरमाणि शिवालिङ्ग मन्त्री महात्मा ।
सद्धामस्तेम भूमि वरसुगुणमणिः प्रेमभूमि र्बलीयान् ॥१९॥
कन्दर्पायत सुन्दरः करलसद्दो नाशिया बन्धुरः ।
कान्ता श्रीमदसिन्धुरः कलितसन्मुक्तावली कन्दरः ॥
कल्पान्तोग्र दरन्धरः कपटेषु स्नेयेदरा मन्दरो ।
लिङ्गण्ण प्रभासिन्धुरागमविदां कालेन गङ्गाधरः ॥२०॥
गाण्ते कृपणाकरे नावितरत्यल्पं द्विको जीवनम् ।
मित्रं नैवानिरीक्षणे व्रजाति सत् कोशालये गोपनः ॥
निक्षिप्य द्विषतां तृणानि वदने मृष्णन् तदीयां श्रियां ।
नेतुं युध्यमुपास्थितं यदि तदा शत्रुं समाक्रोश्यति ॥२१॥
लिङ्गण्णप्रभु धीरभाफक्करन्यस्तासि धाराकृत ।
स्सन्नद्धा खिल दान्ति वाजि रथसत्पारात विद्वेषिणाम् ॥
भेरिद्वन्द्व निनाद सम्भ्रम भरं दृष्ट्वापि शत्रोर्मुखम् ।

न्यस्तं बालतृणं समीक्ष्य सभयं युद्धान्निवृत्तोभवत् ॥२२॥

दानं शात्रवमित्रयो वितनुते कार्यं क्रमात् सम्पदम् ।
तद्धाराशाहति काचितु हृदयं मोदामृतैः सिञ्चति ॥
चित्रं शक्रनिमज्जनैर्विजाते तद्दृश्यस्तु विण्यं सुखम् ।
प्रायेणैव सतां प्रवृत्ति समतः शत्रौ च मित्रे समम् ॥२३॥

आसाते सुकुमारमारसदृशाकारा कुमारोपमौ ।
धीरोदारगुणकरौ सुचरितौ द्वौ तौ कुमारौ गुणै ॥
नम्रौ राजजङ्गमे पितरि च स्वीयेषु सद्रक्षता ।
वन्येषूद्धत शालि बालिशजने वात्माचिता वाचेनौ ॥२४॥

जोयान्निर्वाणनामा गुरुबसवयति ख्यातिशाली कमीयान् ।
अक्कम्माख्या प्रसिद्धा मितगुण भामिनी भागधेया विवेका ॥
ताता तीता ति वीर्योर्जित सकल कलाशील लीला विलोट ।
निर्वोढानेक गाढा वनिपाति हृदयाकोट कार्यैक गूढा ॥२५॥

राज्ञस्वाज्ञानुसारादति बल सकलो वाजिराया द्यनेक ।
क्षोणीपालो तमाङ्गाभरण चलचणोभीष्ट कामेय कोर्तिः ॥
भूमो द्यामाभिरामो म्माधिक सकलभूपाल पादाह साक्षा ।
दीक्षा दीक्षा विनोदै र्जगति विजयते धीर लिङ्गण्णनेता ॥२६॥

शिवोजिकूजि प्रदयानुनीया विनीयपा त्स्याहमजी जनदाशः ।
प्रचण्डदोर्दण्डकरण्डपिण्ड नैर्दण्डयखण्डित भूपमण्डलम् ॥२७॥

निजामनाम्नः पार्थितो विलासः । पराभवो यस्य महीपसन्ततिः ॥
असावाजिप्रेमभरेण नूनं । लिङ्गण्णनेतः प्रपदाति मानम् ॥२८॥

नक्तं दिवं वन्दन नान्दितावाने । महेश्वराराधन भक्ति नैष्ठिकं ॥
सेषां समीपे निवसन्तदाज्ञया । व्याख्यासि सभ ··· षट्स्थलान्यापि ॥२९॥

परःसहस्रं चरमूर्त्तिसङ्घं । मनोनुरूपं वसनादि दानैः ॥
निजेष्टलिङ्गार्चनयानुवेलां । स्वीयरशैवं मतमन्वातिष्ठन् ॥३०॥

क्षेत्रं महत् कापिलसिद्धमास्ति । वासो मुमोक्षो निलयो बुभुक्षौ
अतीतकाशी प्रथितप्रकासि । कैलास संकाशविनेदशालि ॥३१॥

विलसति विविधश्री शैवतत्वार्थनिष्ठै ।
गुरुभिरपि समेतं तत्वबुधैरैव सर्वैः ॥
गुरपुरमिति नाम्ना स्वर्थसिद्ध्येन भास्वान् ।
द्रुहनवकवनोजं भात्यसंख्यै गृहैश्च ॥३२॥

बाहिरिह काठिनास्ते पार्श्वयोः केतसङ्घः ।

विशदमधुरभावा नाविवेके न येया ॥
गुरवइति इहत्या स्तन्वते दन्तभङ्गम् ।
पुरुषवदन शीलो यो भृते बाह्यवृत्तः ॥३३॥
जलनिधिरति वेलः कीर्तिचन्द्रोदयेन ।
स्फुटगुरु गुरुमेनं धीरनिर्वाणनेतुः ॥
नमति बहुलभक्त्या घोषयन्नात्ममन्त्रैः ।
परिचित निज जाया तन्नदी दर्शिताह्वा ॥३४॥
लसदतनु तरङ्ग श्रोणीरूपैः स्वहस्तैः ।
रमल पृथुलफेनैः स्फारमुक्ताफलौघैः ॥
अहरहरति भक्त्याभ्यर्चति क्षेत्रवर्यं ।
मनुपठनाविनिद्रः पाथ्येशासमुद्रः ॥३५॥
अन्योन्य वैषम्य भरेण नद्धा । वसन्तमुख्य ऋतवः षड़ैते ॥
त्यजन्ति वैरं शपथेन तस्मिन् । पुरे गुरोराशु मिथो मिलन्ति ॥३६॥ मणिमः
न वगुरुवासी जन्म साफल्यमेति । व्रजति कपिलसिद्धे श्रीपदे नैक
फलमदितमशेषं जन्म नैव हेतुः । विशदयाति नूनं तद्गुरोः पादमेति ॥३७
अगणितसुकृतौघैः प्रापणीयं जनानां । जननमरणदुःखच्छेदकं क्षेत्रमेतत् ॥
अखिलसितपदानां कामधेनुः कवीनां । कलिमलतमसश्चोन्मीलने कोटिभानुः
लसति कपिसिद्धस्वामिरूपेण शम्भुः ।
सकलभुवनभास्वद्भागधेयैरनन्तैः ॥
कलयति वृषनाथस्तस्य निर्वाणमन्त्री ॥
प्रतिदिनमति संख्या नुत्सवानुत्सुकोपि ॥३९॥
माघमासि चरिते महोत्सवे । शैवलक्ष्म मिलिते शिवयोगे ॥
स्वस्वकुप्रसिद्धये जनाः । देशदेशवसतेरुपयाता ॥४०॥
निर्वाणमन्त्री सह पौरसङ्घैः । स्नुत्तयाज्ञा पितवान् स्वरान्तः ॥
श्वेतातपत्रं चतुरङ्गसैन्यं लिङ्गाङ्ग नेता सह तत्रयातुम् ॥४१॥
कापिलसिद्धमुनिं प्रतिपद्यते । मनसि भक्तिभरेण नमस्कृतिः ॥
मुखरिकाखिलतान्त्रिकवैदिकस्तुति । मुखेन स सर्वलमकुर्वत ॥४२॥
तदनु तस्य नतस्य महोत्सवे । पदसरोजसरोजसमर्चने ॥
न कालितः कलिलः प्रतिबन्धकः । स्तनुभृतां नृभृतां तरभक्तिभिः ॥४३
अयुतकरे फलाद्यभिषेचने । पदशिरःस्थित पूर्ववियन्नदी ॥
प्रतिपद्यतं । श्वशुरतां निजये तुरधातुः ॥४४॥
प्रचलितः प्रतिवत्सरमुत्सवः । प्रतिफलनैव पदाम्बुजे ॥

आकल्पं कलयतु ते वचोविलासैः ।
साकल्यं हृदयसरोजमस्मदीयं ॥९३॥
लिङ्गण्णनेतारममुं बुभुत्सुं ।
लोकोपकाराय परं पुमर्थं ॥
आलम्ब्य तत्वं मदनुग्रहेण ।
मौनण्णविद्वान्विति बोधयत्वम् ॥ ९४॥
तर्कोद्दिर्कतु ते मती शुशिवयो व्याख्याशुमीमांसकार् ।
लिङ्गाङ्गोभयसामरस्यकथने निःशेष वेदान्तकार् ॥
नानाभेदसुशब्द तत्वकथने श्रीपाणिनीयात्मता ।
त्वाचो ऽनागत वीरशैवसमय व्याख्यासुतत्वार्थ कार् ॥९५॥
इत्येवमाज्ञां शिरसा गृहीत्वा ।
लिङ्गण्ण मन्त्री प्रतिपादितार्थं ॥
यथामति व्याकृत वान्प्रसादै ।
रुद्धोधिता न्तःकरणश्वराणां ॥९६॥
विज्ञाय तत्वं सकलागमोक्तं ।
निवृत्तसन्देह तथा स मन्त्री ॥
स्वकीयं सर्वहि शंकरार्थं ।
व्याजिज्ञपज्ञांम मलिनासङ्गे ॥९७॥
विराचित नातिरायौ तत्र लिङ्गण्णमन्त्री ।
चरपदमुपगृह्य प्रपज्ज्ञक्तिपूर्वम् ॥
विशदमधुरभावै र्वाक्प्रसूनैरनेकैः ।
सकलभुवनलक्ष्मी बीजविन्यासरूपैः
आत्माभिरामे रामे हृदयमलसरस्यापि तं गद्यातस्मा । देहो देवालयः स्याच्छ्रु
तियुगकुहरे मन्त्रनिक्षेपमासीत् ॥
पुत्रा शिष्य स्त्वहमिति भवता सत्कृते लिङ्गतत्वे ।
सन्तानास्सप्रकृप्ता प्रथुल माहिभिस्ते सदादौ भवद्भिः ॥९८॥
उभा सात्विक सन्तातिः पञ्चलिला या राजनी सन्ततिः ।
हेतुस्सात्विक सन्ततेरपि सुतारामाधिका षड्विधाः ॥
लब्धं यन्मदनुग्रहेण तु मया लब्धा न शैवा कृतिः ।
यस्या वाङ्मयदर्पणे प्रतिफालत्या कल्पमर्था इमे ॥९९॥
इत्येवं तं वदन्तं प्रभुकुलतिलकं सत्कृतिं प्रार्थयन्तं ।
लिङ्गण्णामात्यमते वृतमथ गुरवः पूरितं गाङ्कितार्थैः ॥

दृष्ट्वा पार्श्वस्थितं मां भुवनहितकृते सत्कृते शायितार्थं ।
पृष्ट्वा हस्तैरुरस्त्यैः शिरसि करुणया साधकं मृशास्तु ॥६१॥
श्रीमन्मौनप्पायिद्वन्ननुपमधिषणा [redacted] पं प्रसादैस्त्वायि स्यात् ।
मुक्तो सत्वेन येर्थास्सकलजनहितो धीरलिङ्गप्पनेतुः ॥
अस्माकं शासनेन प्रथितस्सुकाले तां यान्तु सर्वाभिनन्द्या ।
यावत्कल्पं त्वनल्पं कृतिरपि विदुषां सत्क्रमर्थं प्रसूताम् ॥६२॥
इत्या [redacted] ज्ञा जङ्गमानां सपादे विचलिता मन्मुभादम्मुभाभु ।
त्काञ्चित्कर्तुः कृतिं सद्बुधजनहृदयग्राहिणीं युक्तपूर्णैः ॥
नानाधर्माभिधानस्मृतिनिगमनिरामाशयं कामितादे ।
श्रीमद्दिव्यागमार्थाशयमभि [redacted] दधतीं वीरशैवानुकूलां ॥६३
श्रीमज्जङ्गमलोचनद्वयकृपालोकामृतैः पूरिता ।
सत्तु श्रीमाहिमालयार्थहृदयप्रान्तोदिता भास्वती ॥
हंसैः षट्स्थलतीर्थशोभिविबुधैर्लिङ्गप्पमन्त्रीरणा ।
देषा वाक्सरनुर्वीविके हृदयस्याकल्पमासिञ्चतु ॥६४॥
कैलासादितटेषु नृत्यसमये ब्रह्मादिदेवैर्वृते ।
शर्वाणीमुपवेश्य भद्रसदने नृत्यस्य तां साक्षिणीं ॥
वृत्तोपक्रमनाथमुद्यमभृतः शंखाकृतिवादरानंद्याद्ये ।
[redacted] रूपनीयतां सकृदियं भव्यामदीया कृतिः ॥६५॥

इति श्रीमदनादिप्रमथपरम्परागतषट्स्थलज्ञानबोधकाचार्य वर्यवरगुरुबसवयतिवरलब्धाविकासेन वीरशैवदीक्षागुरु चन्नवीरस्वामिकरकमलसञ्जातेन मौनप्पविदुषा कृते वीरशैवाचारकौस्तुभे क्रियाकाण्डे स्वेष्टदेवतानतिनेत्रवंशादि निरूपणं नाम प्रथमं प्रकरणम् ——

# द्वितीयं प्रकरणम्

लिङ्गप्पनेतश्शृणु सावधान । सर्वार्थविद्या सकलार्थसिद्धिः ॥
संप्राप्यते येन प्रकारं शिवोपि । कदाक्षवच्चैराभि सिञ्च येरवाम् ॥१॥
पराजितसुराचार्यबुद्धिकौशलशोभिका ॥
प्रत्यर्थिकालण्डाभः । भुजाद्रिसूर भूरुहा ॥२॥
लिङ्गप्पमान्त्रिन् धन्योसि । त्वमेव जगतीतले ॥
यद्धाता सरलाबुद्धेः । सत्कृतेः श्रवणे तव ॥३॥
ततस्ते विशदाकीर्ते । स्मारस्पत्याकल्पमुज्वला ॥
विचारेण विना तत्व । निष्कर्षः स्यान्न कस्यचित ॥४॥
तस्माद्विद्यां समभ्यस्य तदर्थश्च विचारयेत् ॥
सच विद्योद्देशतश्च । सा विद्या बुद्धिशाम्यहं ॥५॥
श्रुत्वा यथाक्रमं विद्या । स्तदर्थांश्चित्र रोचते ॥
मुनस्तास्मिन् मते निषु । स्तात्कायमुपयास्यासि ॥६॥
अङ्गानि वेदाश्चत्वारो । मीमांसा न्यायविस्तरः ॥
पुराणं धर्मशास्त्रं च । विद्याह्येता चतुर्दश ॥७॥
शिक्षा कल्पं व्याकरणं । निरुक्तं ज्योतिषं तथा ॥
छन्दो विजितिरित्येते । षडङ्गो वेद उच्यते ॥८॥
ऋकेकविंशभेदास्या । द्यजुरेकशतं मतं ॥
सहस्रधा सामवेदो । नवधाथर्वण स्मृतः ॥९॥
प्रतिपाद्य विभेदेन । वेदाः काण्डद्वयात्मकः ॥
तत्रादिमः कर्मकाण्डो । ज्ञानकाण्डस्समं ततः ॥१०॥
प्रतिशाखं परिज्ञेय । स्सचोपनिषदात्मकं ॥
श्रीरुद्रबृहदारण्य । श्वेताश्वतरमुण्डकाः ॥११॥
कैवल्य कालाग्निरुद्रौ । कठवल्लिच बाष्क ... कः ॥
हंसपरमहंसश्च । ब्रह्मनारायणावुभौ ॥१२॥
रामपूर्वोत्तरौ ताप । नीयो गोपाल पर्वकौ ॥
पूर्वोत्तरौ तापनीयौ । नृसिंहाख्यौ ततः परम् ॥१३॥
पूर्वापरौ तापनीयौ । वेङ्कटेश्वर पूर्वकौ ॥
पूर्वोत्तरौ तापनीयौ । कृरितश्च ततः परम् ॥१४॥
योगशिखा दीप ... शिखा । लिङ्गोपनिषदः क्रमात् ॥
कात्यायन्यो ब्रह्मबन्धु । रारुज्यामृतबिन्दु ॥१५॥
पृच्छब्रह्मचजाबाल । स्तेजोबिन्दुश्च मौद्गलः ॥
बोधायनोपचर्चेच । श्रवणंच पराक्रमः ॥१६॥

प्राच्यश्च शौनकीयञ्च । शिवसंकल्पमेवच ॥
आश्वलायन मैत्रेय । नीय वाजस नीयकम् ॥१७॥
वेदान्तसारप्रणव । वज्रसूच्यं गतास्तथा ॥
साँख्ययसोयं छान्दोग्यं । बृहदारण्यमण्यथ ॥१८॥
तैत्तरीयैतरेयैद्वा । प्रश्नगर्भणिभावपि ॥
शरभश्चाथर्वशिखा । निर्लेप[illegible]श्चादि चिदम्बरम् ॥१९॥
निरालम्ब महावाक्य । महोपनिषदः क्रमात् ॥
पञ्चीकरणमप्येवं । कथा श्रुति रहस्यकम् ॥२०॥
सुशिध्दान्तशिखामुख्या । भक्तियोगादयोमताः ॥
सन्त्यसंख्याकोपनिषद । उत्तरकाण्ड उच्यते ॥२१॥
पूर्वोत्तर बिभेदेन । मीमांसाचोद्वि धामता ॥
वैशेषिकं काणार्द । न्याय शास्त्रं द्विधामतम् ॥२२॥
ईशानः सर्वविद्यानां । स एवादिर्गुरुर्बुधः ॥
तस्य ~~कस्य~~ शिष्या महाविष्णु । स्सर्वज्ञान महोदधिः ॥२३॥
कस्मादन्ता पारिज्ञानो । ब्रह्मा सर्वजगद्गुरुः ॥
सनत्कुमारो भगवान् । ब्रह्मणा श्रुतवानिदम् ॥२४॥
सनत्कुमारस्सर्वज्ञः । कृष्णद्वैप्यायनो मुनिः ॥
अवाप्ताखिल बिज्ञान । स्तस्मादेतच्छ्रुतं मया ॥२५॥
अद्यापि देवलोकोस्ति । शतकोटिप्रविस्तरः ॥
इदं लोक हितार्थाय । सांक्षिप्तं परमार्षिणा ॥२६॥
चतुर्लक्षमितं प्रोक्तं । व्यासेनाद्भुतकर्मणा ॥
अष्टादशधा कृत्वा । तदर्थाभि निवेशितम् ॥२७॥
भारताख्यानमकरो । तस्सलक्ष्यन्त संख्यया ॥
एवं सपादाः पञ्चैते । लक्ष्याः पुण्याः प्रकीर्तिताः ॥२८॥
वाल्मीकेन चय प्रोक्तं । रामोपाख्यानमत्तमम् ॥
ब्रह्मणाभिहितं पूर्वं । शतकोटि प्रविस्तरम् ॥२९॥
आदितो नारदोयैतत् । तेन वाल्मीकये पुनः ॥
वाल्मीकिनाच लोकेषु । प्रकाशितमनुत्तमम् ॥३०॥
चतुर्विंशति साहस्रं । धर्मकामार्थमोक्षदम् ॥
क्रमात्पुराणादिनाम । कथयामि समासतः ॥३१॥
श्रृणुत्वं भक्तियुक्तेन । चेतसा मान्त्रि शेखर ॥
ब्राह्मं पुराणं प्रथमं । पाद्मं वैष्णवमेवच ॥३२॥

शैवं भागवतं चैव । भविष्यन्नारदीयकम् ॥
मार्कण्डेयमथ ज्ञेयं । ब्रह्मवैवर्तमेवच ॥ ३३ ॥
लैङ्गं कथाच वाराहं । स्कान्दं वामनमेवच ॥
कौर्म्यं मात्स्यं गारुडंच । ब्रह्माण्डं तदनन्तरं ॥ ३४ ॥
अष्टादशपुराणानि । गदितानि यथाक्रमम् ॥
अष्टादशपुराणेषु । दशभिः कथ्यते शिवः ॥ ३५ ॥
चतुर्भिर्भगवान्विष्णुः । द्वाभ्यां ब्रह्मा तथा पुनः ॥
एकेनाग्निरथादित्यः । पुराणानि विभागशः ॥ ३६ ॥
शैवं स्कान्दं तथा लैङ्ग्यं । कौर्मं वामनमेवच ॥
वाराहं च भविष्यञ्च । मात्स्यं मार्कण्डयमेवच ॥ ३७ ॥
ब्रह्माण्डं चेति शैवानि । पुराणानि मुने दश ॥
नारदीयं भागवतम् । गारुडं वैष्णवं तथा ॥ ३८ ॥
वैष्णवानि पुराणानि । चत्वार्येतानि कुम्भज ॥
ब्राह्मयं पाद्मं विधेः पुराणे । ब्रह्मवैवर्तमेवच ॥ ३९ ॥
आग्नेयमग्नेरित्थं हि । पुराणानि मुने क्रमात् ॥
उपपुराण्यथो वक्ष्ये । पुराणानि यथाक्रमम् ॥ ४० ॥
आद्यं सनत्कुमारोक्तं । नारसिंहं यथोत्तरम् ॥
सान्धि सौ[redacted]ज्ञं कुमारेण । कथितं तदनन्तरम् ॥ ४१ ॥
चतुर्थं शिवधर्माख्यं । पुराणं नान्दिनेरितम् ॥
ततो दूर्वाससा प्रोक्तं । नारदीयं ततः परम् ॥ ४२ ॥
कापिलं मानवंचैव । कथ्ये उसनैसेरितम् ॥
ब्रह्माण्डंच महापुण्यं । पुराणाख्यं ततः परम् ॥ ४३ ॥
ततः कालीपुराणाख्यं । कालकण्ठच नामकः ॥
ततो वासिष्ठलैङ्गाख्यं । नाम्ना माहेश्वरं च तत् ॥ ४४ ॥
ततः साम्बपुराणाख्यं । सावित्रमितिचेरितम् ॥
पाराशरोक्तममलं । मारिचं भार्गवाभिधं ॥ ४५ ॥
महाभारतं यक्तानि । स्वेतिहासानि कृ[redacted]त्तनशः ॥
मुनीनां कथयामास । सर्वेषां रोमहर्षणः ॥ ४६ ॥
मितं तद्भारतं ज्ञेयं । मप्यष्टादशपर्वभिः ॥
आदिपर्व सभापर्वं । पर्वमारण्यकं तथा ॥ ४७ ॥
विराट्पर्वन्तु विज्ञेयं । चतुर्थं तदनन्तरम् ॥
उद्योगं पर्व । भीष्मपर्वमतः परम् ॥ ४८ ॥

सप्तमं द्रोणपर्वंच । कर्णपर्वमथाष्टमम् ॥
नवमं शल्यपर्वंच । गदायुद्धमतः परम् ॥ ५९ ॥
अयुषिकं तदनु प्रोक्तं । गर्भपातनमेवच ॥
त्रयोदशं तु स्त्रीपर्व । प्रधानमदकस्यच ॥ ६० ॥
शान्तिपर्वमथ प्रोक्तं । आश्वमेधिकमेवच ॥
स्वर्गारोहणकं पर्व । हरिवंशस्तथैवच ॥ ६१ ॥
इत्यष्टादशपर्वाणां । संख्यानं मनुरब्रवीत् ॥
ब्राह्मं तद्दशसाहस्रं । पुराणं परिकीर्तितम् ॥ ६२ ॥
पाद्मं च पञ्चपञ्चाशत् । सहस्रं वैष्णवं तथा ॥
विष्णवाख्यमष्टसाहस्रं । शैवं तद्यष्ट संयुतम् ॥ ६३ ॥
हयग्रीवं ब्रह्मविद्या । यत्र वृत्रवधस्तथा ॥
गायत्रीच समारम्भ । स्तद्भागवतमुच्यते ॥ ६४ ॥
अष्टादशसहस्राणि । भाविष्याख्यं तदुच्यते ॥
चतुर्विंशत्सहस्राणि । नारदेनाभिभाषितम् ॥ ६५ ॥
कथा द्वादशसाहस्रं । मार्कण्डेयमिहोच्यते ॥
आग्नेयमष्टसाहस्रं । कैवर्तं द्वादशं स्मृतम् ॥ ६६ ॥
रुद्रसंख्या तथा लैङ्गं । चतुर्विंशद्वराहकम् ॥
त्रयोदशसहस्रं तु । स्कान्दं चैकशतावृतम् ॥ ६७ ॥
चतुर्दशसहस्राणि । वामनं षट्सहस्रकं ॥
कौर्मं चतुर्दशैवस्यु । मात्स्ये षोडश गारुडे ॥ ६८ ॥
ब्रह्माण्डे द्वादशैवस्यु । सहस्राणि यथाक्रमम् ॥
अष्टादश पुराणानि । संक्षिप्य सुमहायशाः ॥ ६९ ॥
कृतवान् श्लोकरूपेण । गणेशस्तानि चालिखत् ॥
पुराणं धर्मशास्त्रेभ्यः । प्रथमं ब्रह्मणा कृतम् ॥ ७० ॥
अनन्तरं तु वक्त्रेभ्यो । वेदास्तस्य विनिर्गताः ॥
अष्टादशैता स्मृतयः । क्रमेण परिनिसृताः ॥ ७१ ॥
तासु पूर्वो मनुः प्रोक्तो । बृहस्पतिरनन्तरः ॥
दक्षनामा तृतीयस्य । द्वैतमोधयमौङ्गिराम् ॥ ७२ ॥
योगीश्वर प्रचेताश्च । शातातपपराशरौ ॥
संहर्तोशनसा शंखलिखितो वत्रिरेवच ॥ ७३ ॥
विष्णवापस्तम्ब हारीत । धर्मशास्त्र प्रवर्तकाः ॥
अष्टादशोपस्मृतयः । स्तन्नाम परिचिह्निताः ॥ ७४ ॥

एवं चतुर्दश ख्याता । विद्या शिववेति मिता ॥
एतासामपि विद्यानां । मपष्ठभतया पुनः ॥ ६८ ॥
साक्षाच्छिव मुखाद्गीता । अष्टाविंशति संहिताः ॥
अष्टाविंशतिधा भिन्नं । शैवसिद्धान्त सत्तमम् ॥ ६९ ॥
सिद्धान्तं द्विविधं ज्ञेयं । शैवं रौद्रमिति स्थितिः ॥
दशधा शिवभेदास्युः । रौद्रमष्टादशोदिताः ॥ ७० ॥
कामिकाद्या वातुलान्ताः । शिवेनोक्ताः शिवागमाः ॥
आगता शिववक्त्रेभ्यो । दत्ताश्च गिरिजामुखम् ॥ ७१ ॥
मताश्च वामदेवेनेत्यागमाः परिकीर्तिताः ॥
त्रिपदार्थचतुष्पादं । महातन्त्रं जगत्पतिः ॥ ७२ ॥
प्रोक्तवान् हिमवत्पुत्रेभ्य । धर्ममोक्षार्थसाधनम् ॥
सूक्ष्मागम ज्ञानपादे । श्रुतमागम लक्षणम् ॥ ७३ ॥
सर्वभूतक्षये सर्व । लोकानां विलये सति ॥
तत्प्रीत्यै विस्तवतस्त्वष्ट । वागमाः परिकीर्तिताः ॥ ७४ ॥
चतुर्थ्यं विभिन्नोसौ । ज्ञानयोगक्रियात्मकाः ॥
क्रियाख्ययान्तिमेनापि । ज्ञेयः पादचतुष्टयम् ॥ ७५ ॥
(देव्युवाच) ज्ञानपादादिकं स्पष्टं । मयि प्रीत्या कुरु प्रभो ॥
(श्रीशिवः) श्रीमद् ज्ञान ज्ञानपादं । शान्मयोगं योगपादतः ॥ ७६
क्रियामाल्लिङ्ग धृत्यादि । देवस्यालय निर्मितिः ॥
मत्पूजा मत्पराचारो । मन्मन्त्र जपलक्षणम् ॥ ७७ ॥
चर्यापादमिमं प्राह । रागमार्थ विवेकिनः ॥
कामिकं योगजं चिन्त्यम् । कारणं त्वजितं तथा ॥ ७८ ॥
दीप्तसूक्ष्मं सहस्रं च । प्यंशुमान् सुप्रभेदकः ॥
विजयं चैव निश्वासं । स्वायंभुवमथानलम् ॥ ७९ ॥
विरिञ्चरौरवं चेति । मकुटं विमलं तथा ॥
चन्द्रज्ञानं बिम्बं च । प्रोद्गीतं ललितं तथा ॥ ८० ॥
सिद्धसंतान शर्वोक्तौ । पारमेश्वरमेव च ॥
किरणं वातुलं चैता । अष्टाविंशति संहिताः ॥ ८१ ॥
सद्योजातमुखाज्जाताः । पञ्चाद्याः कामिकादयः ॥
वामदेवमुखाज्जाताः । दीप्ताद्याः पञ्च संहिताः ॥ ८२ ॥
अघोरवक्त्रोद्भूताः । पञ्चाथो विजयादयः ॥
पञ्चवक्त्रार्थसंभूताः । पञ्चाथो रौरवादयः ॥ ८३ ॥

ईशानश्चन्द्रनाञ्जाताः । प्राङ्गीताय संहिताः ॥
शैवानां दशभेदानां । श्रोतारस्तु त्रयस्त्रयः ॥ ८४ ॥
रौद्राष्टदशभेदानां । द्वौ द्वौ सिद्धौ मता बुधैः ॥
महेशात्प्रणवः प्राप्तः । प्रणवात्त्रिकलस्मृतः ॥ ८५ ॥
त्रिकलाच्च हरः प्राप्तः । श्रोतारः कामिकः स्मृतः ॥
शुद्धो भस्म विभूतिश्च । श्रोतारो योगज स्मृतः ॥ ८६ ॥
कारणं सर्वरुद्रश्च । कारणज्ञः प्रजापतिः ॥
श्रोतारस्त्वाजितस्यास्य । सुशिवास्य शिवाच्छ्रुताः ॥ ८७ ॥
दीप्त बोद्धारगदाश्च । त्रिमूर्तिश्चाष्टुताशनः ॥
सूक्ष्मो वैश्रवण सूक्ष्म । तन्त्र ज्ञश्च प्रभञ्जनः ॥ ८८ ॥
काकोरमश्च धर्मश्च । सहस्रागम कोविदाः ॥
अंशुरुमोसविश्चैव । श्रोतारंशुमतस्त्रयः ॥ ८९ ॥
बोद्धारः सुप्रभेदस्य । देवेशो विघ्नराट् शशी ॥
बोद्धारः शिवभेदानां । दशानां त्रिंशदीरिताः ॥ ९० ॥
अनादिः परमेशश्च । श्रोतारौ विजयः शतौ ॥
दशार्णो गिरिजा ज्ञेयौ । निःश्वासज्ञौ विचक्षणौ ॥ ९१ ॥
स्वायम्भुवज्ञौ निधन । पद्मोद्भूतौ यथाक्रमम ॥
बोद्धारौ विमलं तन्त्रं । वामाभ्यो ह्यग्नि सौज्ञकाः ॥ ९२ ॥
ज्ञेयौ वीराख्य तन्त्र ज्ञौ । क्रमादेतासु शोभनौ ॥
रौरवागम श्रोतारौ । नन्दि ... शिवाख्यश्च महादेवौ ।
"मकुटागमकोविदौ ॥ ९३ ॥
सर्वात्मदेवा विमल । श्रोतारो वीरभद्रकः ॥
चन्द्रज्ञानस्य बोद्धार । वनन्तश्च बृहस्पतिः ॥ ९४ ॥
बिम्बागमस्य बोद्धारः । प्रशान्तश्च दधीचकः ॥
प्रोद्गीत तन्त्र बोद्धारौ । शूलीक वचनामकः ॥ ९५ ॥
ज्ञातारौ ललितं तन्त्रं । लयाख्ये रुद्रभैरवः ॥
बोद्धारौ शुद्ध तन्त्रश्च । वीरश्चन्दीश्वरश्चतौ ॥ ९६ ॥
सन्तान तन्त्र बोद्धारौ । शिवनिष्ठांसनाहनः ॥
सोमदेवो नृसिंहश्च । शर्वोक्तं तन्त्रमाश्रितौ ॥ ९७ ॥
श्रीदेवी चोद्धना प्रोक्तौ । ज्ञातारौ पारमेश्वरौ ॥
देवः पिताच संवर्धा । ज्ञातारौ किरणागमं ॥ ९८ ॥
शिरश्चाथ महाकालो । ज्ञातारौ वातुलागमम् ॥

उपागमाः

अष्टाविंशति तन्त्राणां । पृथग्भेदो निगद्यते ॥ ९९॥
सप्ताचिर्भूति षाड्भिर्मुनिजलनिधिभिर्नन्दिताश्, दिग्भिः ॥
तिग्माचिःसोमभागैर्द्विरद हुतवहैर्युग्म कामात् नेत्रैः ॥
पश्चात्सा र्ककलाभिर्मुनि दिवसकलाभिर्वह्निनाऽधैश्च धातो
र्गजैर्लोकैः स्वरन्ध्रैस्तपनसगुणितै रागमानां विभेदाः ॥ १००॥
उत्तरं नारसिंहश्च । भैरवोत्तरमेवच ॥
कामिकस्य त्रयोभेदाः । कीर्तितास्तन्त्र कोविदैः ॥
वीणाशिवोत्तरं तन्त्रं । सूतसंतानसारगौ ॥
आत्मयोगामितिख्यातं । पञ्चधा योगजस्यच ॥ १०२
पापनाशं परोद्भूतं । सुचिन्त्यं सुखामृते ॥
वामाख्यंचिन्त्य तन्त्रस्य । भेदास्यु षट्स्मृताबुधैः ॥ १०३॥
महेन्द्र पावकं दैर्घ्यम् । मारणं भीमसंहिता ॥
विद्वेषं कारणं चेति । सप्तधा कारणं स्मृतम् ॥ १०४॥
पार्वतीशं परोद्भूतं । प्रभूतं पद्मसंहिता ॥
अजितस्यच चतुर्भेदाः । कीर्तितास्तन्त्रपारगैः ॥
अमेयमक्षयं चाव । मानन्दमामितौजसः ॥
माधवोद्भवमत्साख्ये । आसंख्यं हि ततोद्भवः ॥ १०५॥
दीप्तस्य नवभेदास्यु । सूक्ष्मस्यत्वेक भेदकम् ॥
अतीतममलं शुद्धं । मप्रमेयं सुबोधकम् ॥ १०६॥
जातिभेदं बोधतन्त्र । मलङ्कार प्रबोधकं ॥
सहस्राख्य तन्त्रस्य । भेदास्युर्दशधा तथा ॥ १०७॥
काश्यपं गारुवं ब्राह्मं । गौतमं नीललोहितं ॥
विद्या पुराणं वासिष्ठं । भूततन्त्रं महेन्द्रकम् ॥ १०८॥
आत्मालङ्कारमीशानो । त्तरं प्रकरणं त्विति ॥
द्वादशांशुमतोभेदा । सुप्रभेद मभेदकम् ॥ ११०॥
मृत्युनाशं भवं सौम्यं । कौबेरेशमतोद्भवम् ॥
अघोरं च महाघोरं । विजये विमलोष्टधा ॥ १११॥
निश्वासं घोरनिश्वासं । निश्वासनयनं सुधा ॥
निश्वासोत्तरकूलेच । निश्वासवदनोदयं ॥ ११२॥
निश्वासकारिकाभेदा । निश्वासस्याष्टभेदकः ॥
प्रजापतिमतं पद्मं । स्वायम्भुवामितित्रिधा ॥ ११३॥
आग्नेयं व्योमसंज्ञेच द्विधा चाग्नेय मास्थितम् ॥
प्रस्वरं फुल्लनयनं । प्रबोधं बोधबोधकम् ॥ ११४॥

आगमभेदः

अमोहं मोहसमयं । शकरं शाकरायकम् ॥
विलेखनं चाविमलम् । हलं भद्रं च वीरकम् ॥ ११५॥
भेदास्स्यु वीरतन्त्रस्य । कीर्तितास्ते त्रयोदश ॥
कालाख्यं कालदहनं । रौरवं रौरवोत्तरम् ॥ ११६॥
महाकालमताचिंत्ये । षड्भेदा रौरवस्य च ॥
मकुटस्य द्विधाभेदो । मकुटं मकुटोत्तरम् ॥ ११७॥
अलङ्कृतं भीमरौद्रं । मट्टहासं वृषोदरम् ॥
आरेयत मातिक्रान्तं । वृषपिङ्गं सुभद्रकम् ॥ ११८॥
आक्रान्तमाचितं भोग । मनन्ताख्यं च मारणम् ॥
वृषगुह्यं सुदत्तं च । विमलस्य तु षोडश ॥ ११९॥
एकपाद पुराणं च । स्थाण्वाख्यं नान्दिकेश्वरम् ॥
श्रीमुखं शंकरप्रोक्तं । वायव्यं शिवशासनम् ॥ १२०॥
शिवभद्रं कल्पभेदं । वारणं शिवसेखरं ॥
देवीमतं स्थिरव्याघ्रं । चन्द्रज्ञाने चतुर्दश ॥ १२१॥
अधलिङ्गारमैशानं । प्रतिबिम्बमयोगजम् ॥
कौटकं कटिनीरघ्नं । कृत्रिमं पद्मशेखरम् ॥ १२२॥
महाविद्या महासारं । तुलाप्रत्ययनैरुते ॥
चतुर्मुखस्तला कोटि । संस्तोभमिति कीर्तिताः ॥
मुखं बिम्बस्य तन्त्रस्य । भेदाः पञ्चदशः क्रमात् ॥
शैवज्ञानं च कवचं । वाराहं पिङ्गलामकम् ॥ १२४॥
कालज्ञानं धनुर्वेदं । मायुर्वेदं धनुर्धरम् ॥
विज्ञानमकृशं गीत । मातोद्यं भरतं तथा ॥ १२५॥
पाशं बन्धं दण्डधरं । सप्रदंष्ट्र मितिक्रमात् ॥
प्रोद्गीत नामतन्त्रस्य । भेदाः षोडश कीर्तिताः ॥ १२६॥
नीलोत्तरं च ललितं । कोमलं ललितं तथा ॥
शाकमौसल संसार । सङ्ग्रहं शशिमण्डलम् ॥ १२७॥
भेदाः सिध्याख्यतन्त्रस्य । चतुर्थो कीर्तिता बुधैः ॥
अमरेशं सुराध्यक्षं । लिङ्गाध्यक्ष मसंख्यकम् ॥ १२८॥
अनिलं शांकरं द्वन्द्वम् । सन्ताने सप्रधा मताः ॥
ईशानं शिवधर्मं च । शिवधर्मोत्तरं तथा ॥ १२९॥
देवी प्रणीत सौम्यस्य । शर्वोक्ता पञ्चधा स्मृताः ॥
समान्य साक्षिणं हंसं । मतङ्गं सुप्रयोगकम् ॥ १३०॥

पद्मारव्यं चौष्करं भेदा । स्सप्तधा पारमेश्वरे ॥
विश्वात्मकं शिवदन्द्वं । कालज्ञानं महामुखम् ॥ २३१॥
शर्वं सर्वात्मकं शुद्धं । ओषुं रुद्रं परोहितं ॥
वातुलोत्तरमित्येते । वातुले द्वादश स्मृताः ॥ २३२॥
इत्येतास्संहिता स्सर्वा । अष्टाधिक शतद्वयम् ॥
शैवानां मष्टपञ्चाश । द्रौद्राणांमिति भेदकाः ॥
रुद्राष्टादश भेदानां । शतं सार्धमुदाहृतम् ॥ २३३॥
वैनायकं तथा शाक्तं । कपालो सारमेवच ॥
वैष्णवं बुद्ध शैवं च । षड्दर्शनमितीरितम् ॥ २३४॥
पादं वैनायकं विंद्या । त्कट शाक्तं विदुर्बुधाः ॥
कापालं जठरं प्रोक्तं । वक्षस्थानन्तु सारकम् ॥ २३५॥
स्कन्दौ तथा वैष्णवं । तथा शैवं शिरस्मृतम् ॥
षड्दर्शनममाङ्गानां । षट्स्थानं परिकीर्तितम् ॥ २३६॥
गछेद्यनंञ्च दूष्यं च । हिममाङ्गं सर्वपावनम् ॥
दूषणछेदने देहि । ममाङ्गस्य सतादृशः ॥ २३७॥
आततायि समालोके । मद्भक्तोपि न शैवावित् ॥
ग्रन्थसंख्या मागमानां । वैदिकानन्तु वर्ण्यते ॥ २३८॥
परार्धलक्षोपि च लक्षकोटि ।
ततोयुतं वैनियुतं च पद्मं ।
शंखेषु लक्षेन लक्षकोटियुग्मे ।
काटी सहस्रार्थेनत कोटिरेक ॥ २३९॥
नदी सहस्रं नियुतार्बुदेधो ।
कोटि त्रिलक्षानलकोटयश्च ।
सहस्रलक्ष त्रितये तथा च ।
सहस्रमधेनिच कोटिरेक ॥ २४०॥
सहस्रषट्कं च तथोपि लक्षम् ।
चण्डांशु लक्षं शतकोटिलक्षम् ।
दिव्यागमानां शिवरुद्रकानाम् ।
ग्रन्थस्य संख्या गादिता क्रमेण ॥ २४२॥
शम्भं परार्धं कमलार्बुदेधो ।
व्योमार्क कोटिर्गजासिन्धुलक्षम् ।
भूताब्धि साहस्रमितीरिताथ ।

आगम ग्रन्थ संख्या

ग्रन्थस्य संख्या गदिता क्रमेण ॥१४२॥
एकदश शत सहस्रायुत ।
लक्ष प्रयुत कोटयः क्रमशः ।
अर्बुद वृन्दे खर्वो निखर्व ।
महापद्मकं भवरसास्मात् ॥१४३॥
जलधिश्चान्त्यं मध्यं ।

॥१४४॥

अथा वैदिक तन्त्राणि । यानि शास्तन्तु भूतले ॥
महा माया शम्बरं च । योगिनि जालशंबरम् ॥१४५॥
तत्र शम्बरं चैव । भैरवाष्टकमेव च ॥
चन्द्रज्ञानं वासुकं च । महा संमोहनं तथा ॥१४६॥
महोच्छुष्मकं महादेव । वातुलं वातुलोत्तरम् ॥
हृद्भेद मातृभेदं च । गुह्य तन्त्रं च कामिकम् ॥१४७॥
कला सोम कला सारं । तथान्य कुब्ज कोमकम् ॥
मयोत्तरं च । वीणाख्यं । क्रोकलं क्रोकलोत्तरम् ॥१४८॥
पञ्चामृतं रूपभेदं । भूतोड्डामरमेव च ॥
कलासारं कुलोड्डीशं । कुलचूडामणिस्तथा ॥१४९॥
सर्वज्ञानोत्तरं चैव । महानेवमतं तथा ॥
महालक्ष्मी मतं चैव । सिद्धयोगीश्वरीमतं ॥१५०॥
कुरूपिका मतं चैव । रूपिकामतमेव च ॥
सर्ववीरमतं चैव । विमला मतमुत्तमम् ॥१५१॥
पूर्वपश्चिम दक्षिणं च । मुत्तरं च निरुत्तरम् ॥
तत्र वैशेषकं ज्ञेयं । वीरयोगं ततः परम् ॥१५२॥
अरुणेशं मोहनेशं । विशुद्धेश्वरमेव च ॥
सर्ववीरमतं चैव । विमला मतमुत्तमम् ॥१५३॥
एवमेतानि तन्त्राणि । तथान्यान्यपि भूरिशः ॥
अथ वैष्णवतन्त्राणि । अष्टादश शतानि च ॥१५४॥
तान्येक शतसंख्यायां । पाञ्चं पाद्मेश्वरं मतम् ॥
(माया वैभव नलकूबर)
त्रैलोक्य मोहनं विष्णु । तिलकं कनकाह्वयम् ॥१५५॥

नारदीयं लानदीयं । वासिष्ठं पुष्कलाह्वयम् ॥
सनत्कुमारं सनकं । सत्याख्यं विश्वसंहितम् ॥ २५६ ॥
सानन्दाख्यं माहिप्रश्नं । स्त्रीप्रश्नं पुरुषोत्तमम् ॥
महेन्द्रसंहिता वच्य । प्रश्नात्यन्तकसागरम् ॥ २५७ ॥
वासिष्ठं सात्वतं रेजो । द्राविडं श्रीकराह्वयं ॥
सांवर्तं विष्णुसद्भावं । सिद्धान्तं विष्णुपूर्वकम् ॥ २५८ ॥
विष्णुतत्वं चक्रैमारं । रहस्यं विष्णुपूर्वकं ॥
विष्णुवैभाविकं तारं । सौम्यमीशानसंहिता ॥ २५९ ॥
पू.. तन्त्रं शौनकीयं । मारीचं दक्षसंहिता ॥
औपेन्द्रं योगहृदयं । हारीतं पारमेश्वरम् ॥ २६० ॥
आत्रेयं मान्दिरं विष्व । कसेन मौंश सांह्वयम् ॥
वैहायसं विहङ्गेन्द्रं । हार्बं परमपौरुषम् ॥ २६१ ॥
याज्ञवल्क्यं गौतमीयं । पौलस्त्यं शाकलाह्वयं ॥
ज्ञानाख्यं जामदग्न्यं च । याम्यं नारायणात्मकम् ॥ २६२ ॥
पाराशर्यं च जाबालं । कापालं वामनाह्वयम् ॥
पयोत्तरं बार्हस्पत्यं । जैमिनं सात्वताह्वयम् ॥ २६३ ॥
कात्यायनीयं वाल्मीकं । मौपगायनसंहिता ॥
हिरण्यगर्भमागस्त्यं । काष्र्यं बोधायनाह्वयं ॥ २६४ ॥
भारद्वाजं नारसिंहं । गार्ग्यमुत्तमपूर्वकम् ॥
शातातपाङ्गिराङ्गीरसं ॥ काश्यपं पैङ्गलाह्वयं ॥ २६५ ॥
त्रैलोक्यमोहनं योग । नारदीयं च वारणं ॥
कृष्णचामरमज्ञेयं । मार्कण्डेयस्य सन्महम् ॥ २६६ ॥
महासनत्कुमाराख्यं । व्यासाख्यं विष्णुसंहिता ॥
मार्कण्डेयं पार्शदं च । ब्राह्मं नरकसंहिता ॥ २६७ ॥
संवादः कद्रु शुत्राभ्य । मुमामहेश्वराह्वयम् ॥
दत्तात्रेयं च शर्वाख्यं । व्यासाख्यमभिराह्वयम् ॥ २६८ ॥
संकर्षणाख्यं प्रद्युम्नं । वामनं कल्कराघवौ ॥
प्राचेतसाख्यमित्येत । चतुर्तमेकोत्तरं शतम् ॥ २६९ ॥
शतानि तन्त्रनामानि । पूर्वैरुक्तान्यनुक्रमात् ॥
एवमेकोत्तरं शतम् । वैष्णवं तन्त्रमुच्यते ॥ २७० ॥
चतुष्षष्टिशैवतन्त्राण्या । न्यान्यप्यथ भूरिशः ॥
वेदानुरोधतन्त्राणां । प्रामाण्यमितराणि तु ॥ २७१ ॥

अवैदिकपराण्येव । सदृशौ ~~[illegible]~~ निगमागमौ ॥
वेदसिद्धान्तयोरैक्य । मेकार्थःप्रतिपादनात् ॥१७२॥
प्रामाण्यं सदृशं ज्ञेयं । पण्डितैरेतयोःसदा ॥
अथवा शिवनिश्वास । श्रुतिभ्यस्ते शिवागमाः ॥१७३॥
आदौ का शिववक्त्रेभ्यः । साक्षादेव विनिर्गताः ॥
परस्पराविरुद्धार्थाः । शिवोक्ता निगमागमाः ॥१७४॥
अल्पबुद्धि विशेषः परिकल्प्यते ॥
निगमानामागमानां । परमाप्तोपदेशकः ॥१७५॥
प्रामाण्यमविशेषेण । ज्ञातव्यं तत्वदर्शिभिः ॥
नरार्षि देवद्रुहिण । विष्णुरुद्राद्युदीरितम् ॥१७६॥
एकोत्तरमुत्कर्ष । पूर्वपूर्वप्रबोधकम् ॥
इति क्रियासारमुख्य । ग्रन्थेषु प्रतिपाद्यते ॥
इति श्री वीरशैवाचार कौस्तुभे क्रियाकांड वैदिका
वैदिक विद्योद्देश निरूपणं नाम द्वितीयं प्रकरणम् ॥

## तृतीयं प्रकरणम्.

मौनव्रत विद्वन्नाद्देष्ट । विद्योद्देशात् परात्परम् ॥
तस्मात्चराचरं विश्वं । प्रादुर्भवति तद्वद ॥२॥
लिङ्गप्रमाणेमूर्धन्य । विद्वत्कामिक कल्प ~~भवत्सृष्टं~~ विशेषेण
भवत्सृष्टं प्रोच्यते शृणु सत्प्रभो ॥
ईशानसर्वविद्यानां । सदाद्यादि गुरुर्बुधाः ॥
इत्यादिभ्यःप्रमाणेभ्यः । शिवो विद्याधिपःस्मृतः ॥३॥
इत्थं चराचरं विश्व । माविर्भवति तच्छृणु ॥
श्रीमान्महानादि भक्तः स्वप्रकाशो द्वितीयकः ॥४॥
योऽसौ ब्रह्मेति संप्रोक्तः । शिवतत्वार्थवेदिभिः ॥
तस्मायस्तु प्रादुरभू । त्सानिरञ्जनजङ्गमः ॥५॥
तच्छिखायां शून्यलिङ्गं । सञ्जातं विश्वकारणं ॥
तस्मान्निष्कल लिंगंतु । संजातं स्वेच्छया पुनः ॥६॥
तस्मात्तु निष्कलाल्लिंगा । न्महालिंगमभूत्स्वयं ॥
तस्मात्प्रणव लिंगंतु । सृष्टिन्मुखमजायत ॥७॥
एतस्माच्छिवतत्वन्तु । सादाख्यं च ततोभवेत् ॥
तस्मान्महेश्वरो जातः । तस्माद्रुद्रसमुद्भवः ॥८॥

(left margin notes:) शिवोपाख्य / सृष्टि निरूपणम्

अनादि भक्त

तस्माज्जनार्दनो जातः । तस्माज्जातः पितामहः ॥
पितामहात्समुद्भूतं । जगदेतच्चराचरम् ॥ ९ ॥
आद्यावनादिभक्तस्य । लक्षणं वच्मि ते क्रमात् ॥
यदास्ति तत्परं ब्रह्म । स्वयं नादिर्भवेद्यदः ॥ १० ॥
तस्मादनादिभक्तोऽय ।मित्युक्तस्तत्ववेदिभिः ॥
लिंगजंगम आदिश्या । द्भक्तश्चानादिरूपकः ॥ ११ ॥
लिंगलिंगमिति प्रोक्तं । प्राणो जंगम उच्यते ॥
लिंगजंगमयोरैक्य । स्वरूपो भक्त उच्यते ॥ १२ ॥
जंगमो लिंगरूपस्या ल्लिंगं जंगमरूपकम् ॥
लिंगजंगमसंयोगो । नादिभक्तस्य लक्षणम् ॥ १३ ॥
लिंग जंगम भक्ताश्च । त्रयस्त्वेक स्वरूपकाः ॥
देहप्राणास्तथा जाते । त्यागमान्वय निर्णयः ॥ १४ ॥
नित्यं पूर्णं चिदानन्दं । सद्रूपं ब्रह्म कीर्तितम् ॥
ये देवा खण्डरूपं स्या । देतद्भक्तस्य लक्षणम् ॥ १५ ॥
गुरुर्लिंगं चर शेषः । पादाम्भ·· करूपकम् ॥
अलघु यद्बृहद्वस्तु । परिपूर्णं गुरु स्मृतम् ॥ १६ ॥
दृश्यं लीनं जगद्यास्मिन् । तन्नित्यं लिंगमुच्यते ॥
स्वयं प्रकाशरूपश्च । सच्चिज्जंगम इष्यते ॥ १७ ॥
सौख्यं शतगुणाधिक्यं । प्रसादोऽयं विशिष्यते ॥
एतेषां सुरसापूरैः । स्वरसीकृत चिद्विधम् ॥ १८ ॥
एतत्पादोदकं विंद्या । तद्रूपो भक्त उच्यते ॥
आचारो गुरुसम्बंधो । निष्ठा तल्लिंग संयता ॥ १९ ॥
सुज्ञानं जंगमश्चैव । प्रत्यक्षंच प्रसादकः ॥
तत्तदेकरसंचैव । पादोदकमिदं शृणु ॥ २० ॥
इयं चानादि भक्तस्य । पञ्चाचार स्वरूपकम् ॥
तस्य रूपान्तरेणैव । षाड्विधाचार लक्षणम् ॥ २१ ॥
अखण्डपूर्णं नित्यंच । चित्प्रकाशं प्रकीर्तितम् ॥
परानन्दं चिद्रसंच । षाड्विधं भक्तलक्षणम् ॥ २२ ॥
पूर्णनित्यं चित्प्रकाशं । परानन्दंच चिद्रसम् ॥
शृणु देवि ह्यखण्डत्वं । षाड्विधं लिंगलक्षणम् ॥ २३ ॥
चित्पकाशं पूर्णनित्यं । परमानन्द चिद्रसम् ॥
अखण्डत्वं महादेवि । षाड्विधं चरलक्षणम् ॥ २४ ॥

परमानन्द पूर्णेच । नित्यत्वं चित्प्रकाशकम् ॥
चिद्रसं स्यादखण्डत्वं । षाड्विधं शैवलक्षणम् ॥ २५॥
सद्रसं पूर्णमित्येच । चित्प्रकाशं ममप्रिये ॥
परानन्द मखण्डत्वं । षाड्विधं तीर्थलक्षणम् ॥ २६॥
इदं तस्य पृथाङ्मिश्र । षाड्विधाचारलक्षणम् ॥
गुरुलिंगं चरश्चैव । प्रसादः पादवारिच ॥ २७॥
भूति रुद्राक्ष मन्त्राश्च । भक्तांगमिति कथ्यते ॥
भूतिः परानुभूतिर्हि । स्नानं तत्रावगाहनम् ॥ २८॥
त्रिपुण्ड्रं त्रिगुणाभावो । ह्यलिंगलिंगमेवतत् ॥
मनो मुखानि चाक्षाणि । रुद्राक्षाणि विधायवै ॥ २९॥
चतुर्दशकमाद्धार्या । मण्येतद्रुद्राक्षधारणम् ॥
पञ्चषाड्विधतत्वाणि । नश्वरन्ते समासतः ॥ ३०॥
यस्यां पञ्चाक्षरी साच । स्वयमेव षडक्षरी ॥
इत्यष्टावरणं तस्य । तत्वष्टकमुदीरितम् ॥ ३१॥
आचार पञ्चकं रूप । षट्कमावरणाष्टकम् ॥
तत्वष्टकं स्वस्वरूपा । द्विभिन्नं तस्य भिन्नतः ॥ ३२॥
भवेदनादि भक्तस्य । स्वरूपमिदमेव हि ॥
सर्वकारण रूपंच । सर्वतत्व परं तथा ॥ ३३॥
अनादि भक्त रूपन्त । तवोदितमिदं शृणु ॥
भक्तो निरूटे निज भावरूपिणे ।
निराश्रयानन्द निवासदायिनो ॥
निर्देहके निर्विषये निरिन्द्रिये ।
निःकेवले नित्यपदे विराजते ॥ ३४॥
इदं चानादि भक्तस्य । स्वरूपं परिकीर्तितम् ॥
तस्य कारण मूर्तीना । माश्रयत्वमथोच्यते ॥ ३५॥
पश्चिमेऽनादि भक्तस्य । हृदि भाति निरञ्जनः ॥
शिखायां शून्यलिंगन्तु । ब्रह्मरन्ध्रे चिदंबरम् ॥ ३६॥
भ्रूमध्ये शिवभक्तेच । कण्ठे पञ्चैव शक्तयः ॥
कला पञ्चकमेवं स्या । न्मुख पञ्चमेणच ॥ ३७॥
सादरव्य पञ्चकं नाद । पञ्चकं मूर्ति पञ्चकम् ॥
अनाहते तस्य भाति । चेश्वराष्टकमेवच ॥ ३८॥
मणिपूरक चक्रस्य । पञ्च विंशति मूर्तयः ॥

स्वाधिष्ठाने तस्य चैक । दशरुद्राः प्रकीर्तिताः ॥ ३९ ॥
तस्याधारे विराडन्त । र्यामि हैरण्य गर्भकाः ॥
ब्रह्मणो नवभेदश्च । विष्णोश्च दशमूर्तयः ॥ ४० ॥
एवं ह्यनादिभक्तस्य । चिद्ब्रह्माण्डनिवासिनः ॥
त्र्यशीति मूर्तयः प्रोक्ता । नियम्या विश्वयोनयः ॥ ४१ ॥
एवं ह्यनादिभक्तस्य । लक्षणं परिकीर्तितम् ॥
भक्तस्य पश्चिमहृदि । स्थितोऽनादि जंगमः ॥ ४२ ॥
तस्य स्वरूपमधुना । समासेन प्रकाश्यते ॥
पश्वादि भक्तस्य हृच्चि । प्रद्माँ तरे सदा ॥ ४३ ॥
चिन्मण्डलश्रयोपेत । प्रणवासनमध्यगः ॥
निरञ्जनस्तत्प्रजब । स्वरूपोऽत्र निगद्यते ॥ ४४ ॥
निराकृते रञ्जनं यन्मा । यामोह विजृम्भितम् ॥
येन स्वरूप सिद्धेन । स भवेद्धि निरञ्जनः ॥ ४५ ॥
तदेव निष्कलं ब्रह्म । निर्विकल्पं निरञ्जनं ॥
निर्नामं निरवग्रहं । निरशनं निष्कारणम् ॥ ४६ ॥
निःसंगं निरुपाधिकं । निरुपमं निष्क्रियम् ॥
निश्चलं निष्पुण्यं । निरनुग्रहं निराधिकम् ॥
निर्वासिनं निर्वहं । निर्वेद्यं निरघं ।
निरञ्जनपदं चैत । द्व्रजेत जंगमं ॥ ४७ ॥
अद्यन्तरहितं ज्योति । रनादि प्रभुरव्ययः ॥
अनादेशो ह्यव्यक्तश्च । जंगमस्यान्निरंजनः ॥ ४८ ॥
इदं तस्य निरालम्ब । स्वरूपं समुदीरितम् ॥
चतुर्वेदाश्च तद्गर्भे । पुराणं तस्य मध्यमं ॥ ४९ ॥
योगिनो मुनयः सर्वे । जंगमांघ्रि समाश्रिताः ॥
तस्य देहे समस्तानि । भुवनानि चतुर्दश ॥ ५० ॥
पादयोरतलं विंध्या । त्पादोर्ध्वं वितलं तथा ॥
जन्घयेस्सुतलं ज्ञेयं । जानुदेशे महातलं ॥ ५१ ॥
तलातलं तदूर्वोश्च । गुह्यस्थाने रसातलम् ॥
कटिबन्धे तु पातालं । सप्तलोकाः समीरिताः ॥ ५२ ॥
भूलोको नाभिमध्ये तु । भुवर्लोकस्य चोदरे ॥
सुवर्लोकस्तु हृदये । जनलोकस्तु कन्धरे ॥ ५३ ॥

तालुवेश्चापि तपो लोक । स्सत्यलोको ललाटके ॥
महर्लोकस्तस्य मूर्ध्नि । पतर्दश समीरिता: ॥५४॥
ब्रम्हांडं मुकुटं तस्य । वदनं गगनं शृणु ॥
तद्बाहवो दिशस्सर्वा । नेत्रे चंद्र दिवाकरौ ॥५५॥
शरीरं व्योमरूपंच । वितलं पादपंकजम ॥
करस्थलं शून्यलिंगं । मेघा: सर्वे जटा: स्मृता: ॥५६॥
चंद्रज्योत्स्नाविभूतिश्च । वेदा: सर्वे क्रिया मया: ॥
नक्षत्राणि च फलानि । रुद्राक्षा: कुलपर्वता: ॥५७॥